# ईशावास्योपनिषद्

पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते
पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते
ॐ शान्तिः शान्तिः शान्तिः

ॐईशा वास्यमिदँ सर्वं यत्किं च जगत्यां जगत्
तेन त्यक्तेन भुञ्जीथा मा गृधः कस्य स्विद्धनम् १

कुर्वन्नेवेह कर्माणि जिजीविषेच्छतँ समाः
एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे २

असूर्या नाम ते लोका अन्धेन तमसावृताः
ताँस्ते प्रेत्याभिगच्छन्ति ये के चात्महनो जनः ३

अनेजदेकं मनसो जवीयो नैनद्देवा आप्नुवन्पूर्वमर्षत्
तद्धावतोऽन्यानत्येति तिष्ठत्तस्मिन्नपो मातरिश्वा दधाति ४

तदेजति तन्नैजति तद्दूरे तद्वन्तिके
तदन्तरस्य सर्वस्य तदु सर्वस्यास्य बाह्यतः ५

यस्तु सर्वाणि भूतान्यात्मन्येवानुपश्यति
सर्वभूतेषु चात्मानं ततो न विजुगुप्सते ६

यस्मिन्सर्वाणि भूतान्यात्मैवाभूद् विजानतः
तत्र को मोहः कः शोक एकत्वमनुपश्यतः ७

स पर्यगाच्छुक्रमकायमव्रणमस्नाविरँशुद्धमपापविद्धम्
कविर्मनीषी परिभूः स्वयंभूर्याथातथ्यतोऽर्थान्व्यदधाच्छाश्वतीभ्यः समाभ्यः

अन्धन्तमः प्रविशन्ति येऽविद्यामुपासते

ततो भूय इव ते तमो य उ विद्यायाँ रताः ९

अन्यदेवाहुर्विद्ययान्यदाहुरविद्यया
इति शुश्रुम धीराणां ये नस्तद्विचचक्षिरे १०

विद्यां चाविद्यां च यस्तद्वेदोभयँ सह
अविद्यया मृत्युं तीर्त्वा विद्ययामृतमश्नुते ११

अन्धन्तमः प्रविशन्ति येऽसंभूतिमुपासते
ततो भूय इव ते तमो य उ संभूत्याँ रताः १२

अन्यदेवाहुः संभवादन्यदाहुरसंभवात्
इति शुश्रुम धीराणां ये नस्तद्विचचक्षिरे १३

संभूतिं च विनाशं च यस्तद्वेदोभयँ सह
विनाशेन मृत्युं तीर्त्वा संभूत्यामृतमश्नुते १४

हिरण्मयेन पात्रेण सत्यस्यापिहितं मुखम्
तत्त्वं पूषन्नपावृणु सत्यधर्माय दृष्टये १५

पूषन्नेकर्षे यम सूर्य प्राजापत्य व्यूह रश्मीन्समूह तेजः
यत्ते रूपं कल्याणतमं तत्ते पश्यामि योऽसावसौ पुरुषः सोऽहमस्मि १६

वायुरनिलममृतमथेदं भस्मान्तँ शरीरम्
ॐ क्रमो स्मर कृतँ स्मर क्रतो स्मर कृतँ स्मर १७

अग्ने नय सुपथा राये अस्मान्विश्वानि देव वयुनानि विद्वान्
युयोध्यस्मज्जुहुराणमेनो भुयिष्ठां ते नमउक्तिं विधेम १८

ॐ पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते
पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते
ॐ शान्तिः शान्तिः शान्तिः

इति वाजसनेयसंहितायामीशावास्योपनिषत्संपूर्णा